भ्युपावहरामि । मैत्रावरुणीं पयस्यां प्रति ॥ २५ ॥

आसन्दीं निदधाति । स्योनासि । स्योनमिति सुखनाम । स्योनासि सुखरूपासि । सुषदासि । सुखेन यस्यां सीदन्ति सा सुषदा । अधीवासमस्यामास्तृणाति । क्षत्रस्य योनिरसि । योनिः स्थानमसि । सुन्वन्तमस्यामुपवेशयति । स्योनामासीद सुखरूपामासन्दीमासीद अधिरोह । सुखदामधिरोह क्षत्रस्य स्थानमारोह ॥ २६ ॥

यजमानस्य उरोऽभिमृश्य जपति । निषसाद वारुणी गायत्री । अधियज्ञं यजमानो वरुणः निषसाद निषण्णः । धृतव्रतः । धृतं व्रतं कर्म येन स तथोक्तः । धृतव्रतो वै राजा न वा । एष सर्वस्मा इव वदनाय न सर्वस्मा इव कर्म्मणे । यदेव साधु वदेद् यत् साधु कुर्यात्तस्मै वा एष च श्रोत्रियश्चेति श्रुतिः । वरुणः पस्त्यास्वा । पस्त्यासु विक्षु आ आधिपत्येनेत्युपसर्गार्थपरिपूर्त्तिः । साम्राज्याय सम्राड्भावाय राज्यायेति श्रुतिः । सुक्रतुः सुकर्म्मा शोभनप्रज्ञो वा ॥ २७ ॥

पञ्चाक्षान्पाणावावपति । अभिभूरसि । कृतत्रेताद्वापरकलयश्चत्वारोऽक्षाः पञ्चमो रमणस्तत्र कलिः सर्वानभिभवति । स उच्यते । यजमानो वा । तत्संबन्धेन अभिभूरसि अभिभवितासि । एतास्तव पञ्च दिशः कपर्दकोपलक्षिताः कल्पन्तां क्लृप्ता भवन्तु । ब्रह्मन् प्रथममामन्त्रयते यजमानो ब्रह्माणं त्वं ब्रह्मासि सवितासि सत्यप्रसव इति । ब्रह्मा प्राह । त्वमेव ब्रह्मासि । भवसि सविता चासि । सत्याभ्यनुज्ञः । द्वितीयं प्रत्याह त्वं ब्रह्मासि वरुणोऽसि । सत्यौजाः । सत्यम् । ओजो यस्य सत्ये वा ओजो यस्य स सत्यौजाः । तृतीयं प्रत्याह त्वं ब्रह्मासि । इन्द्रोऽसि विशौजाः । इन्द्रस्त्वमसि विष्णुः । ओजो यस्य स विडौजाः इति प्राप्ते विशौजा इत्यन्याय्यसमासः । अत एव पदकारो नावगृह्णाति । चतुर्थं प्रत्याह त्वं ब्रह्मासि रुद्रोऽसि सुशेवः । रुद्रस्त्वमसि । सुशेव इति सुखनाम शोभनं सुखयिता सुमङ्गलनामानं ह्वयति । बहुकारः बहुकरोतीति बहुकारः श्रेयः करोतीति श्रेयस्करः । भूयः करोतीति भूयस्करः तेषां संबोधनं हे बहुकार श्रेयस्कर भूयस्कर । स्फ्यमस्मै प्रयच्छति । इन्द्रस्य वज्रोऽसि । यतः इन्द्रो ह यत्र वृत्राय वज्रं प्रजहारेत्युपक्रम्य तस्य स्फ्यस्तृतीयं चेत्यादिना श्रुतिग्रन्थेनोक्तम् । अतस्त्वां ब्रवीमि । तेन हेतुना मे मम यजमानं रध्य रध्यतिर्वशगमने वशव-

र्त्तिनं कुरु। यो वै राजा ब्राह्मणादबलीयान् अमित्रेभ्यो वै स बलीयान् भवतीति श्रुतिः ॥ २८ ॥

हिरण्यमस्मिन्निधायाभिजुहोति । अग्निः पृथुः । योऽयं देवानामग्निः पृथुः इतरस्मादग्नेर्धर्म्मणस्पतिः । धारणस्य पतिः । जुषाणः सेवमानः । प्रीयमाणो वा । अग्निः पृथुर्धर्मणस्पतिराज्यस्य घृतस्य वेतु पिबतु स्वाहा सुहुतं चैतद्धविर्भवतु । अक्षाभिवपति । स्वाहाकृताः हे अक्षाः । स्वाहाकारपूर्विकयाहुत्या तर्पिताः सन्तः सूर्यस्य रश्मिभिर्यतध्वं स्पर्द्धं कुरुत । सजातानां समानजन्मनां च भ्रातॄणां क्षत्रियाणां च मध्यमेष्ठ्याय । मध्यान्मः । मध्ये भवो मध्यमः । मध्यमे प्रदेशेऽवस्थिताय यजमानस्य यतध्वमित्यनुवर्त्तते ॥ २९ ॥

सर्पति । सविता प्रसविता । सवित्रा अभ्यनुज्ञानस्य कर्त्रा प्रसूतः प्रसर्पामि । एवं सरस्वत्यादिभिर्योजनीयम् । इन्द्रेणास्मे । अस्मे इति तृतीयान्तम् । इन्द्रेण मया । शेषं सुबोधम् ॥ ३० ॥

इत उत्तरं चरकसौत्रामणी अश्विनोरार्षम् । सुरां सन्दधाति । अश्विभ्यां पच्यस्व । पाको नाम अग्निपरिणामउपेष्टता । सरस्वत्यै इन्द्राय शोभनत्राणाय सुत्राम्णे सुत्रातव्याय वा भैषज्यं हीन्द्रस्य कर्त्तव्यम् । सौत्रामण्यां सुरां पुनाति वायुः पूतः । सौमी गायत्री । यः सोमः वायुना पूतः सोमः प्रथमं पूतिगन्ध आसीत्ततो देवैर्वायुरुक्तः। अपहतविरूपं सुगन्धं सोमं कुर्विति । ततो वायुना अपहृतः सोमस्य गन्धः । ऐन्द्रवायवब्राह्मणे एतत्प्रतिपादितं यदेवं तदस्माभिर्व्याख्यातं विभक्तिव्यत्ययेन । यतोऽसौ वायुरूपः पूतश्च पवित्रेण प्रत्यङ् । नीचैः अतिस्रुतः । स्रु गतौ । अतिक्रम्य गतः । स सोमः इन्द्रस्य युज्यः । समानयोगी सखा । समानख्यातः कथमिन्द्रं हिनस्तीति शेषः ॥ ३१ ॥

गृहं गृह्णाति । कुविदङ्ग । आनिरुक्ता सौमी त्रिष्टुप् । कुविदिति बहुनाम । अङ्गेति क्षिप्रनाम । हे सोम यथा केचिज्जनपदाः । कच्चित् अङ्ग क्षिप्रं बहुक्षेत्रं यवमन्तः बहुयवाः यवं चित् । चिच्छब्दो वितर्के एवं वितर्क्य यथा दान्ति दाप् लवने । लुनन्ति । अनुपूर्वम् । आनुपूर्व्येण वियूय पृथक्कृत्य निश्चित्य । एवमिहेहैषां कृणुहि भोजनानि । इह च आदाय धनानि एषां यजमानानां कुरु भोजनानि भोग्यानि ।

वस्तूनि ये बर्हिषो नमउक्तिं यजन्ति ये यजमाना बर्हिषः उपरिस्थिताः नमउक्तिं नम इत्यन्ननाम । उक्तिर्वचनम् । हविर्लक्षणमन्नमादाय उक्तिं याज्यामभिधाय यजन्ति यागं कुर्वन्ति । उपयामेत्यादि निगदव्याख्यातम् ॥ ३२ ॥

युवं सुरामम् । अनुवाक्या । पुत्रमिव अनुष्टुप्त्रिष्टुभौ अश्विसरस्वतीन्द्रदेवत्ये । तत्रेतिहासमाचक्षते । नमुचिर्नामासुर इन्द्रस्य सखिभूत आस । स यत इन्द्रस्य विश्वस्तस्य सुरया वीर्यं पपौ सोऽश्विनौ च सरस्वतीं चोवाच यत् पीतवीर्योऽहं नमुचिना ततोऽश्विनौ सरस्वती चापां फेनं वज्रमसिञ्चत् ततस्तेनेन्द्रो नमुचिशिरश्चिच्छेद ततो लोहितमिश्रः सुरासोम उदतिष्ठदत उच्यते । हे अश्विनौ युवां सुरामयं सोमं सुरमणीयं वा नमुचावासुरेऽवस्थितं सचा सह भूत्वा एकीभूय च विपिपाना विविधं पिबन्तौ हे शुभस्पती स्वामिनौ इन्द्रं कर्मसु आवतं पालयतं स्वकर्मक्षमं कुरुतमित्यर्थः ॥ ३३ ॥

पुत्रमिव पितरौ । यथा मातापितरौ पुत्रं पालयतः । एवमुभावप्यश्विनौ हे इन्द्र त्वाम् आवथुः । पुरुषव्यत्ययः पालितवन्तौ । काव्यैः कविकर्मभिः मन्त्रदर्शनैरित्यर्थः । दंसनाभिः दंश इति कर्म्मनाम । कर्मभिश्च मन्त्रः । कथमवगम्यते । अश्विनौ त्वां पालितवन्तावित्याह यत्सुरामं व्यपिबः शचीभिः । यस्मात्त्वं सुरामयं पीतवानसि शचीभिः कर्मभिः नमुचिशिरश्छेदनं कर्म्म कृत्वा स्ववीर्येण न ह्यन्य एतत्कर्मकर्त्तुं शक्य इत्यभिप्रायः । सरस्वती त्वा मघवन्नभिष्णक् । सरस्वती च त्वां हे मघवन् अभिष्णक् भैषज्यं कृतवती । अनुषक्ता अभवत् । अभिष्णक्शब्द कण्ड्वादिषु पठ्यते ॥३४॥

उव्वटकृतौ मन्त्रभाष्ये दशमोऽध्यायः ।

आनन्दपुरवास्तव्यवज्राटस्य च सूनुना ।
मन्त्रभाष्यमिदं क्लृप्तं भोजे पृथ्वीं प्रशासति ॥ १ ॥